


SAPTHAGIRI (SANSKRIT)
SPIRITUAL ILLUSTRATED MONTHLY
Volume:11, Issue: 07
October 2024, Price Rs.20/-
No. of pages-24

तिरुमलतिरुपतिदेवस्थानानि

# सप्तगिरिः

आध्यात्मिकसचित्रमासपत्रिका

अक्टोबर् - २०२४ रू. २०/-

## गरुडवाहनम्

08.10.2024

तिरुमल

## श्रीवेङ्कटेश्वरस्वामिनः सालकट्ल ब्रह्मोत्सवः

2024 अक्टोबर् 04 तः 12 पर्यन्तम्



## तिरुमलतिरुपतिदेवस्थानम्

### तिरुमल

# श्रीवेङ्कटेश्वरस्वामिनः सालकट्ल ब्रह्मोत्सवः

### २०२४ अक्टोबर् ०४ तः १२ पर्यन्तम्

| दिनाङ्क | वासरः | प्रातः उत्सवः | रात्रौ उत्सवः |
|---|---|---|---|
| ०४.१०.२०२४ | भृगुवासरः | ध्वजारोहणम् | महाशेषवाहनम् |
| ०५.१०.२०२४ | मन्दवासरः | लघुशेषवाहनम् | हंसवाहनम् |
| ०६.१०.२०२४ | भानुवासरः | सिंहवाहनम् | मौक्तिकमण्टपम् |
| ०७.१०.२०२४ | इन्दुवासरः | कल्पवृक्षवाहनम् | सर्वभूपालवाहनम् |
| ०८.१०.२०२४ | भौमवासरः | आन्दोलिकायां मोहिन्यवतारोत्सवः | गरुडवाहनम् |
| ०९.१०.२०२४ | सौम्यवासरः | हनुमद्वाहनम् | गजवाहनम् |
| १०.१०.२०२४ | बृहस्पतिवासरः | सूर्यप्रभवाहनम् | चन्द्रप्रभवाहनम् |
| ११.१०.२०२४ | भृगुवासरः | रथोत्सवः | अश्ववाहनम् |
| १२.१०.२०२४ | मन्दवासरः | चक्रस्नानम् | ध्वजावरोहणम् |



# गीतामृतम्

श्रीभगवानुवाच -

हतो वा प्राप्स्यसे स्वर्गं जित्वा वा भोक्ष्यसे महीम्।
तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः।।

सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ।
ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसि।।

(भगवद्गीता २.३७-३८)

श्रीभगवान् उवाच। हे अर्जुन!

भावः - कुन्तीकुमार! अर्जुन! युद्धे शत्रुभिः कौरवैः त्वयि मृते स्वर्गसुखमनुभविष्यसि। अथवा शत्रवः एव त्वया पराजिताश्चेत् राज्यभोगमनुभविष्यसि। तस्मात् युद्धाय कृतनिश्चयो भव।(अनेन दिव्यमन्त्रेण अर्जुनाविष्टमोह महाभूतः श्रीकृष्णेन पलायितः। तीव्रमुमुक्षुभिः नैष्ठिकपरमभक्तैः प्रोक्त अधैर्यपतनात् साधनात् पतनं न भविष्यति। आत्मनिष्ठायां अनुत्तीर्णत्वेऽपि साधकः परलोके उत्तमलोकमुक्तिसुखञ्च प्राप्स्यति। अतः अनुष्ठाने मरणेऽपि जीवनेऽपि वा श्रेयः एव। अतः मनश्चाञ्चल्यं माभूत्)

सुखदुःखे जयापजयौ लाभलाभौ समं सम्भाव्य पश्चात् युद्धाय सन्नद्धो भव। एवं कृतञ्चेत् पापदोषः तव न स्यात्। द्वन्द्वसहनशक्तिहीनः सुख दुःखे सममपि द्रष्टुमसमर्थः प्रपञ्चे किमपि कार्यं कर्तुं न शक्नोति।

# सङ्कीर्तनम्



वन्दे वासुदेवं
वृन्दारकाधीशवन्दितपदाब्जं
इन्दीवरश्याममिन्दिराकुचतटी
चन्दनाङ्कितलसच्चारुदेहं
मन्दारमालिका मकुटसंशोभितं
कन्दर्पजनकमरविन्दनाभं
धगधगितकौस्तुभाभरण वक्षस्स्थलं
खगराजवाहनं कमलनयनं
निगमादिसेवितं निजरूपशेषप
न्नगराजशायिनं घननिवासं
करिपुरनाथ संरक्षणे तत्परं
करिराजवरदसङ्गतकराब्जं
सरसीरुहाननं चक्रविभ्राजितं
तिरुवेङ्कटाचलाधीशं भजे -

(अन्नमाचार्यसङ्कीर्तनम्)



# ब्रह्मोत्सवाह्वानम्

देवादिदेवस्य श्रीवेङ्कटेश्वरस्य ब्रह्मोत्सवः प्रचलति। भवतां दर्शनोत्साह एव दक्षिणारूपेण समर्पयितुं भक्तिप्रपत्तिभ्यां सहिताः ब्रह्मोत्सवान् द्रष्टुं समागच्छन्तु, समागच्छन्तु इति गरुत्मान् देशविदेशस्थान् आबालगोपालादीन् सर्वान् आह्वयति। एतदाह्वानं पुरस्कृत्य अशेषप्रजानीकः ब्रह्मोत्सववैभवं नयनानन्दकरतया द्रष्टुं भक्तिपूर्वकं महावेगेन आगन्तुं समायत्तः भवति।

तिरुपतिनगरं प्रविष्टाः प्रजाः आदौ अलिपिरिस्थ गरुत्मद्विग्रहं नमस्कृत्य विविध वाहनद्वारा तिरुमल क्षेत्रं प्रस्थिताः भवन्ति। बहुविधवाहनानां शब्दः स्वामिवाहनसेवादर्शनमनस्कानां श्रवणपेयः एव भवति। आनन्दभरिताः जनाः ध्वनिकालुष्यं न गणयन्ति। वाहनप्रयाणिकाः पादयात्रा प्रयाणिकाश्च गोविन्दनामोच्चारण अनन्तरायं कुर्वन्ति। इदं दृश्यं नयनपर्व भवति।

सर्वे भक्ताः तिरुमलक्षेत्रं प्राप्य अध्वश्रमं विस्मृत्य तिरुमल पर्वतसौन्दर्यं पश्यन्तः मन्दवायुस्पर्शेन मधुरतन्मयत्वेन पुलकितगात्राः भवन्ति।

तिरुमल क्षेत्रे भक्तानां गोविन्दनामघोषः, नादनीराजनम् आस्थानमण्टपेषु श्राव्याध्यात्मिकसङ्कीतनम् सांस्कृतिककार्यक्रमे हेला, अन्नप्रसादवितरणशालासु मधुरातिमधुरभोजनम्, फल पुष्प प्रदर्शनशालासु पुष्पपरिमलनिर्भरत्वम् माडवीथीषु स्वामिनां वाहनसेवासु विभिन्नालङ्काराः, भजनबृन्दाः, प्रबन्धगोष्ठीगानं मङ्गलवाद्यघोषाः एवं बह्वाकर्षणीयमनोहर दृश्यशोभावैभवं अवश्यं दर्शनीयमेव। महाभाग्यशालिनः एव एतदृशाद्भुतसौन्दर्यं पश्यन्ति, भक्त्या हारतिं ददति। हरिनामसङ्कीर्तनं कुर्वन्ति। एवं आध्यात्मिकानुभूतिदायकसेवासु भागं गृहीतवतां भक्तानां जीवितमेव धन्यं भवति। स्वामिमूर्तये क्रियमाणकैङ्कर्य-निवेदनानि अखण्डतया प्रवर्तन्ते। एतत्समये अद्वितीयं दर्शनमिदम्।

देवस्थानाधिकारिणः एवं तिरुमलक्षेत्रागतभक्तेभ्यः आतिथ्यमर्यादादिसकलसौकर्याणि कल्पयन्ति। क्षेत्रसन्दर्शनफलं स्वामिवाहनसेवावैभवदर्शनफलञ्च सम्यक् प्रापयन्ति। तिरुमल क्षेत्रस्वामिदर्शनार्थं आगतैः सर्वै भक्तैः सम्प्रदायवस्त्रधारणेनैव स्वामिदर्शनं प्राप्य करुणाकटाक्षसिद्धिं प्राप्नुवन्तु इत्याशास्महे।

एवमेव पद्मावतीदेव्याः सम्भाव्यमान नवरात्र्युत्सवेषु पद्मावतीदेवीदिव्यदर्शनं प्राप्य धन्याः भवन्तु। सर्वकार्यसिद्ध्यर्थं पद्मावतीं प्रणमेयुः।

# अक्टोबर् -२०२४

सम्पुटिः-११ सञ्चिका-०७

स्वस्तिश्री चान्द्रमान श्रीक्रोधिनामसंवत्सर भाद्रपदकृष्णचतुर्दशी आरभ्य श्रीक्रोधिनामसंवत्सर आश्वयुजकृष्णचतुर्दशी पर्यन्तम् - २०२४



मुखचित्रम् - श्रीवेङ्कटेश्वरस्वामिनः ब्रह्मोत्सवः, तिरुमल।
अन्तिमरक्षापुटः- चक्रस्नानम् (तिरुमल)।


## सङ्केतः

प्रधानसम्पादकः,
सप्तगिरिः, ति.ति.देवस्थानानि
तिरुपतिः - ५१७ ५०७.
दूरभाषा - ०८७७ - २२६४५४३, २२६४३५९
सम्पादकः,
०८७७ - २२६४३६०
सूचनानाम्, आक्षेपाणां च कृते सम्पर्कं कुर्वन्तु -
sapthagiri.helpdesk@tirumala.org



एका पत्रिका : रू.२०/-
वार्षिकग्राहकत्वम् रू.२४०/-
आजीविक ग्राहकत्वम् रू.२४००/-


*वेङ्कटाद्रिसमं स्थानं*
*ब्रह्माण्डे नास्ति किञ्चन ।*
*वेङ्कटेशसमो देवो*
*न भूतो न भविष्यति ॥*


तिरुमलतिरुपतिदेवस्थानम्

# सप्तगिरिः

आध्यात्मिकसचित्रमासपत्रिका

गौरवसम्पादकः-
श्री जे.श्यामला राव, I.A.S.,
कार्यनिर्वहणाधिकारी
ति.ति.देवस्थानानि

प्रकाशकः - प्रधानसम्पादकः
डा॥ के.राधारमणः, M.A., M.Phil., Ph.D.,

सम्पादकः -
डा॥ वि.जि.चोक्कलिङ्गम्, M.A., Ph.D.,

मुद्रापकः - श्री पि.रामराजु, M.A.,
प्रत्येकाधिकारी,
ति.ति.दे.मुद्रणालयः,
तिरुपतिः।

छायाचित्रग्रहणम् - श्री पि.एन्.शेखरः,
छायाचित्रग्राहकः, ति.ति.दे.
श्री बि.वेङ्कटरमणः,
सहायक-छायाचित्रग्राहकः, ति.ति.दे.






# सरस्वतीतत्त्वम्

- डा.जि.चन्द्रशेखर्
चरवाणी - ९४९१७९४५०६

**वन्दे देवीं भुवनजननीं चन्द्रचूडावभासां**
**वेदाकाशं भवभयहरां कोटिसूर्यप्रकाशां।**
**नित्यां शुद्धां निगमविभवां शारदां दिव्यरूपां**
**ब्रह्मानन्दां प्रणतवरदां वाङ्मनोतीतरूपाम्।।**

भारतदेशे आश्वयुजमासे अक्टोबर् ८ दिनाङ्के सरस्वतीपूजा निर्वाह्यते।

एकं सद्विप्राः बहुधा वदन्ति इति ऋग्वेदवचनम्। एकं परमार्थवस्तु बुधाः भिन्नभिन्ननामभिः व्यवहरन्ति। भारतदेशे शक्तिरूपमिदं वस्तु अनादिकालादुपास्यते। आदिशक्तित्वेन पराशक्तित्वेन परमार्थतत्त्वं पूज्यते। कार्यभेदं व्यवहार भेदमनुसृत्य एकैव शक्तिः विविध देवतारूपे पूज्यते। एकै - कस्यां मूर्तौ देवतारूपे पूज्यते। एकैकस्यां मूर्तौ प्रत्येककला अभिव्यज्यते। प्रतिदेवतापि पूर्णशक्तेः प्रतीकापि तस्याः शक्तेः विभूतयः अनन्ताः। एतच्छक्तिविस्तारं अल्पमेधसा वयं न जानीमः। अत एव काश्चिद्विभूतीः स्वीकृत्य देवतामूर्तिरूपे प्रतिपाद्य फलसिद्ध्यर्थमुपास्महे।

तादृशदेवतामूर्तिषु सरस्वतीदेवी आदिशक्तेः वाग्बुद्धि विद्याज्ञानानामधिष्ठात्री। अस्याः देव्याः अनुग्रहात् मानवाः ज्ञानसम्पन्नाः भवन्ति। परब्रह्मशक्तिस्वरूपं ज्ञातुं सूक्ष्मसुनिशित बुद्धिरावश्यकी। वाग्देवीस्तवात् मेधाशक्तिः प्रचोद्यते। सरस्वतीपूजास्तोत्रद्वारा तत्कृपापात्राः सर्वोत्कृष्टज्ञानं प्राप्स्यामहे।

शक्तिपदार्थयोः भेदः नास्ति। शक्तिमनोजीवाः अपि एकमूलस्वरूपाः एव। सृष्टिस्थितिलयानां शक्तिरेव मूलम्। निराकारनिर्गुणपरब्रह्म तान्त्रिकोच्यमानमहामायाशक्ति सम्बन्धिनी एव। परिणामशक्तिरहितस्थिरत्वे ब्रह्म इति सृष्टिपरिणामदशायां शक्तिरिति ब्रूमः। ब्रह्म शब्दस्य अर्थः शक्तिः। उभयोः अविनाभाव सम्बन्धः दृश्यते। पौराणिककथासु तन्त्रेषु इमां शक्तिं स्त्री मूर्तित्वेन आराधयामः। महापुरुषस्य भार्यात्वेन न इमामाराधयामः। त्रिमूर्तिषु ब्रह्मणः सरस्वतिदेवी, विष्णोः लक्ष्मीदेवी शङ्करस्य पार्वतीदेवी, भार्याशक्तिरूपेण आराधनं अस्माकमाचारः। शक्त्याराधनं वेदेषु पश्यामः। ऋग्वेदे अम्भृणीसूक्तं रात्रिसूक्तमित्यादीनि बहूनि दृश्यन्ते।

सरस्वती शक्तिस्वरूपिणी जगत्स्रष्टुः भार्या सती प्रजोत्पादकजगन्माता भवति। सामान्यतया सरस्वतीत्यस्य प्रवहन्नदीत्यर्थः ऋग्वेदे नदीत्वेन तदधिष्ठानशक्तित्वेन वर्णिता। इयं प्रवित्रतायाः प्रतीका फलप्रदात्री देवता। इयं सारप्रदात्री शारदेति वागधिष्ठानवागीश्वरी शक्तिमती ब्राह्मी पराविद्या महाविद्येति भक्ताः भजन्ते। पौराणिकवाङ्मये अस्याः सम्बन्धिन्यः बह्व्यः गाथास्सन्ति। प्रवहन्ती इत्यालङ्कारिकार्थे वागिति, गृह्यमाने सति सृष्टिनिर्माणस्य पूर्वभावबुद्धिरूपेण सन्दृश्यते। पश्चात्सैव व्यक्तसृष्टिरूपेण प्रारब्धा।

सर्वकळाणां शास्त्राणां वृत्तीनां कौशलानामियं चैतन्यदात्री। अज्ञानमन्धकारः इति ज्ञानं श्वेतवर्णः इति अतः श्वेतवर्णेति उच्यते। सर्वकलाधिष्ठत्रीत्वान् सुन्दररूपेयं भासते। शुभ्रवस्त्रधारिणी पद्मासना सरस्वती अस्याः हस्तचतुष्टये वीणा अक्षमाला पुस्तकानि धरति। प्रायशः पाशाङ्कुश पद्मत्रिशूल शङ्खचक्रधारिणीरूपेण विग्रहरूपाण्यपि अस्याः दृश्यन्ते। इयं सरस्वती मूलानक्षत्रे जाता। पञ्चमुखैः अष्टभुजैः अपि सरस्वतीविग्रहाः केषुचित्स्थलेषु भारते दृश्यन्ते।

नयनत्रयनीलकण्ठविग्रहाः अपि सन्ति। अस्मिन् रूपे इमां महासरस्वतीति ब्रूमः। अर्थादिमां दुर्गापार्वती रूपेणापि आराधयामः। भर्तुः ब्रह्मणः हंसः एव अस्याः अपि वाहनं भवति। कुत्रचित् मयूरवाहनमपि अस्याः पश्यामः।

**विग्रहप्रतीकानामन्तरार्थः -** सरस्वतीदेवी ब्रह्मणः शक्तिरिति तस्य बुद्धिरिति भाव्यम्। अनया, बुद्धिशक्त्या विना सृष्टिनिर्माणकार्यक्रमोऽपि न स्यात्। अतः बुद्धिशक्तिः अत्यद्भुतं शुद्धमिति कारणात् श्वेतरूपे प्रकाशमानेव तां वर्णयमः।

तस्याः चत्वारः हस्ताः चतुर्दिक्षु व्याप्तशक्तिं, सर्वव्यापकत्वं सूचयन्ति। विद्याधिदेवतात्वात् वामहस्ते पुस्तकं दृश्यते। पुस्तकमिदं समस्तभौतिकविद्यानां सङ्केतः उन्नतभावरहित बुद्धिकौशलं रसहीनं अयश्शलाकातुल्यमिति ज्ञापयितुमेव द्वितीयहस्ते वीणां धरति। वीणा ललितकळानां सङ्केतः। दक्षिणहस्ते अक्षमाला भौतिकविद्यापेक्षया पराविद्या प्रशस्तमिति अनुक्तैव वेदयति। सपिच्छं मयूरवाहनं भौतिक सम्पत्सूचयति। भौतिकसम्पदः साधकं मनःकल्लोलं कुर्वन्ति। एवं मयूरोऽपि सर्वानाकर्षति। अविद्यापरप्रपञ्चसौन्दर्यमपि तादृशमेव। अतः मयूराधिरोहः अविद्यादभवमिति भाव्यम्। हंसः क्षीरनीरमिश्रिते क्षीरमेव गृह्णाति। अयं तस्य विवेकः। हंसवाहिनीत्वेन सरस्वती भाविता चेत् सविवेकविद्या स्वरूपिणीति भावनीयम्। अविद्या भौतिकशास्त्र सम्बन्धीनी। विद्या आध्यामिक पराविद्या मोक्षमार्गगामिनी। पराविद्या न निर्लक्ष्यीकर्तव्या। जीवः अविद्यया मृत्युं तीर्त्वा विद्यया अमृतं प्राप्नोतीति ईशावास्योपनिषत्संदेशः। अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते भौतिकज्ञानेन केवलं क्षुद्बाहतृप्तिः भवेत्। परमशान्त्यर्थं पुनरावृत्तिराहित्यर्थं आध्यात्मिक विद्या अवश्यमध्येया। एवं सरस्वत्याः हंसं मयूरञ्च वाहनत्वेन ग्रहणे परमार्थः सर्वैः ज्ञेयः। इयं सरस्वती इन्द्र सूर्यकुमारस्वामि वाल्मीकिभिः संस्तुता। अतः सरस्वतीप्रार्थनायाः प्रामुख्यं ज्ञानप्राप्तये सर्वे जानन्तु।

सरस्वती ब्रह्ममुखादुत्पन्ना ज्ञानिनामधरेषु नदीरूपेण च स्थातुं, ब्रह्मणा आज्ञप्ता - (ब्रह्मपुराणम्)

ब्रह्माज्ञया और्वं बडबाग्निं समुद्रान्तः गुह्यं स्थापयासेति पुराणकथनम्। ब्रह्मणः सरस्वती, सावित्री, गायीत्रीति भार्यात्रयमिति केचित् पुराणानि। मत्स्यपुराणे, तिस्रः अपि एकमूर्तिरूपा एवेति वर्णितम् (ब्रह्मा महासौन्दर्यरूपिणी सरस्वतीं सृष्ट्वा तस्यामेव प्रेम्णि पतितः। अनिच्छन्तीं तां ग्रहीतुं चतुर्मुखो बभूवेति। गत्यन्तराभावात् तां परिणीय शतवर्षपर्यन्तं भार्याभूत्वा स्वायम्भुवं सुतं सुषुवेति (मत्स्यपुराणम्)) गुप्तकाले १२ शताब्द्यां सरस्वती शकरूपेणापि परिणतिं प्राप्ता। भोजः धारानगरे अद्भुतं सरस्वती विग्रहं निर्ममेउज्ञयिन्याः पूर्वनाम एव धारानगरम्। अद्यापि सरस्वतीविग्रहः लण्डन् नगरस्थ विक्टोरिया अलबेर्टम्यूजियमे वर्तते। इदं विग्रहरूपेण कांस्यविग्रहरूपेण निर्मीय अद्य ज्ञानपीठबहुमतिग्रहीतृभ्यः दीयते। चण्डीसप्तशती, मार्कण्डेयपुराणे, सरस्वतीरहस्योपनिषदि सरस्वतीदेवी अत्यद्भुततया वर्णिता। आन्ध्रदेशे सामर्लकोटानगरे भीमेश्वरालये च सरस्वती विग्रहः वर्तते। कारम्पूडि नगरे हैहयराज निर्मित सरस्वतीविग्रहस्यापि बहुप्रशस्तिर्वर्तते। भारती, सरस्वती, शारदा, हंसवाहना, जगती वागीश्वरी, कौमारी, ब्रह्मचारिणी, बुद्धिधात्री, वरदायिनी, क्षुद्रघण्टा, भुवनेश्वरी इति ब्राह्म्याः द्वादश नामानि त्रिसन्ध्यं यः पठेत् तस्य प्रसन्ना परमेश्वरी सर्वसिद्धिकरी जिह्वाग्रे भविष्यति।

**स्तोत्रसाहित्ये सरस्वती : -** सरस्वतीध्यानमिति ऋग्वेदे विंशतिश्लोकाः समुपलभ्यन्ते। आश्वलायनमुनिः पञ्चश्लोकेषु सरस्वतीं तुष्टाव। सरस्वत्यष्टोत्तरशतनामानि सुप्रसिद्धानि।

ब्रह्मपुराणे व्यासेन द्वात्रिंशच्छ्लोकेषु ब्रह्मणा, विद्यादानवाक् सरस्वतीनाम्ना, नारद नन्दकेश्वर, संवादे एकादश श्लोकेषु, विष्णुना निर्गुणसरस्वतीनाम्ना एकादशश्लोकेषु श्रीमन्नारायणेन द्वादशश्लोकेषु गणेशेन त्रेयोदशश्लोकेषु कुमारस्वामिना दशश्लोकेषु, शिवेन देवेन्द्रेण नवश्लोकेषु श्रीरामेण षोडश श्लोकेषु एकादशश्लोकेषु, भगवता सूर्येण नवश्लोकेषु वाल्मीकिमहर्षिणा नवश्लोकेषु देवीभागवते त्रयस्त्रिंशच्छ्लोकेषु अश्वलायनमुनिना अष्टाविशतिश्लोकेषु, शङ्करानन्दस्वामिना श्लोकाष्टके श्रीज्ञानसरस्वतीभक्ति धारानाम्ना श्लोकाष्टके दुर्गासप्तशतौ पञ्चमाध्याये महासरस्वतीध्याननान्मा एकस्मिन् श्लोके, वागीश्वरीध्याननाम्ना पाञ्चरात्रागमे श्लोकत्रये, मार्कण्डेय पुराणे श्लोक चतुष्टये सरस्वती मनोहरशैल्यां मनोरञ्जकतया स्तुता। एवं त्रिमूर्तिभिः, बहुमहर्षिभिः वागधिदेवता सरस्वती स्तोत्रसाहित्ये स्तुता

**सरस्वतीपूजादिने - चतुर्मुखमुखाम्भोज वनहसवधूर्मम।**
**मानसे रमतां नित्यं सर्वशुक्ला सरस्वती।।**

इति सरस्वतीं प्रार्थयामः।







कृष्णं कमलपत्राक्षं पुण्यश्रवणकीर्तनम्।
वासुदेवं जगद्योनिं नौमि नारायणं हरिम्।।

दीपावळि अमावास्या पर्वदिनम् आश्वयुजमासे ३१ दिनाङ्के ज्योतिष्कैः नरकचतुदर्शीपर्वदिनमिति निर्णीतम्।

श्रीकृष्णः नरकासुरं चतुर्दश्यां जघानेति अतएव नरकचतुर्दशीति नाम आगतमिति वदन्ति। हिमालयपर्वत प्राग्ज्योतिषपुरदुर्गपालकः राक्षसानां राजा नरकासुरः आसीत् सः भूदेव्याः राक्षसांशेन जातः। इन्द्रसिंहासनमाक्रम्य देवता मातुः अदितेः कर्णकुण्डले बलाज्जग्राह। देवतास्त्रियः अपहृत्य कारागारबद्धाश्चकार। इन्द्रप्रार्थनया सत्यभामासहितः श्रीकृष्णः प्राग्ज्योतिषपुरमागत्य मुरं, तस्य सप्तपुत्रान् स्वयं युद्धाय आगतं नरकासुरञ्च सुदर्शनचक्रेण जघान। तदा भूदेवी वराहावतारे त्वत्संसर्गात् जातः मम पुत्रः एव नरकासुरः इत्यवोचत्। तदा श्रीकृष्णः नरकासुरबद्धाः सर्वाः स्त्रियः मोचयित्वा नरकपुत्रं भगदत्तं पट्टाभिषिक्तश्चकार। तदा देवाः मानवाश्च, महासन्तोषसम्भरिताः दीपमालिकाः ज्वालयामासुः। तदा प्रभृति दीपावळिपर्वदिनं भारते प्रवर्तते। निशान्ते नरकासुरहननात् शिरःस्नानमतीव मुख्यं भवति। अस्मिन् सन्दर्भे - दाह्यमानाः आधुनिककालीनमहाशब्दोप्तादकाः ऊध्वगामिन्यः अग्निज्वालाः नरकासुरे उपयुक्तमारणायुध चिह्नानि भवन्ति।

दीपमूले स्थितो ब्रह्मा दीपमध्ये जनार्दनः।
दीपाग्रे शङ्करः प्रोक्तः सन्ध्यादीप नमोस्तु ते।।

इत्युक्तत्वात् आध्यत्मिक दृष्ट्यापि दीपप्रज्वलनं महापापहरं भवति। केषुचित्प्रान्तेषु नरकासुरचित्रमपि दाहयन्ति। आश्वयुज कृष्णपक्षस्य चतुर्दश्यां चन्द्रोदयकाले सः हतः इति। तत्पूर्वं नरकासुर पीडिताः दुःखनिमग्नाः स्नाननूतनवस्त्रधारण रहिताः आसन्। अतः नरकपीडाविमुक्ताः महानन्देन अभ्यङ्गस्नानादीनि स्वेच्छया आचरन्तीति पद्मपुराणकथनम्। नरकात् तरणमेव नरकचतुर्दशीति ''निर्णयसिन्धौ'' प्रोक्तम्। आश्वयुज कृष्णपक्षस्य चतुर्दश्यां विधूदये ''तिलतैलेन कर्तव्यं स्नानं नरकभीरुणा'' (पद्मपुराणम्) आश्वयुजकृष्णअमावास्या **दीपावळि अमावास्या** -

दीपमालिकाभिः लक्ष्मीदेव्याः नीराजनमस्मिन्दिने दीयते इति दीपावळि नामागतम्। नरकलोकवासिनां दीपावळिः

- डा. पि.सुमलता
चरवाणी - ६३०३४४०३८४



कल्प्यते इत्यपि दीपावळिनाम सार्थकं भवति।

हिन्दूमतसंस्कृतेः सम्प्रदायस्य च दीपवळिपर्वमेकं सुप्रसिद्ध चिह्नम्। बलिचक्रवर्ती विष्णुना पातालं स्वपादेन पातयामासेति महोत्सवदिनमिवापि, दीपावळिः परिगण्यते। श्री रामोऽप्यस्मिन्दिने एव पट्टाभिषिक्तः इति महोत्सवदिनमिदम्। विक्रमशकस्थापकविक्रमार्कचक्रवर्ती अपि अस्मिन्दिने पट्टाभिषिक्तः। एवं बहुमुख्यसंघटनानां चिह्नमिदं शुभदिनम्।

लक्ष्मीदेवी भूलोकमागत्य गृहे गृहे परिभ्रमतीति विश्वासेन गृहं सर्वे शुचिमर्कुर्वन्ति। महाराष्ट्रे इदं पञ्चदिनपर्वदिनम् मध्याह्ने पञ्चभक्ष्यपरमान्नानि पचनं कृत्वा बन्धुभिस्साकं महामोदेन खादन्ति।

वामनमूर्तिः, बलिबन्धितकारागारदेवताः मोचयित्वा लक्ष्म्या साकं क्षीरसागरं प्रापयामास इति तदानन्दस्मारक लक्ष्मीप्रीतिकरदिनमिदमिति लक्ष्मीपूजा दिनमिति महतां वचनम्। अकिञ्चनधनिकभेदेन विना सर्वे दीपावळि पर्वदिने भागस्वामिनः भवन्ति। जामात्रे नूतनवस्त्राणि दत्वा तैलाभ्यङ्गन स्नानं कारयन्ति।

महालयपक्षे पितृदेवताः स्वर्गात् भूलोकमागत्य भूलोकात् पुनः पितृलोकं गच्छन्तीति तेषां मार्गप्रकाशार्थं दीपान् धृत्वा आकाशः दर्शनीयः इति शास्त्रवचनम्। भूदेवी भर्तारं विष्णुं प्रार्थयित्वा नरकमरणानन्तरं पुत्राय भगदत्ताय वैष्णवास्त्रं दापयामासेति सः भगदत्तः कौरवपक्षे विद्यमानः अर्जुनोपरि तद्वैष्णेवास्त्रं प्रयुयोजेति वदन्ति। तदा कृष्णः दक्षिणहस्तेन वैष्णवास्त्रं अवरुद्धवानिति पश्चात् निस्तेजं तत् कृष्णस्य, कण्ठे, वनमालाजातेति वदन्ति। दीपज्वालाकान्तिभिः सस्यनाशककीटकानि नश्यन्तीति एवं कृषीवलानां दीपावळिः महोपकारं करोतीत्यपि वदन्ति। एवं भारतदेशे विदेशस्थ भारतीयैरपि गृहे गृहे दीपावळिपर्वदिनं महानन्देन महोत्साहेन च सकुटुम्बं समाचर्यते।

**वसुदेवसुतं देवं कंसचाणूरमर्दनम्।**
**देवकीपरमानन्दं कृष्णं वन्दे जगद्गुरुम्।**





# कर्पूर औषद गुणाः



ज्ञात्वा वा अज्ञात्वा कृतानां पापानां निवारणार्थं हारति स्वीकारः आध्यात्मिकातरार्थं बोधयति। कर्पूरं पूजा द्रव्यरूपेण भाव्यम्। तस्य ज्वालन रूपिणी क्रिया द्वारा कृमिकीटकादयः पार्श्वे वा यान्तीति तस्य आचारस्य पृष्टे विद्यमानं वैज्ञानिकं सत्यम्। ''लारेसि' इत्युच्यामान वृक्ष जातेः सम्बन्धि अस्य शास्त्रीयं नाम। आङ्गल भाषायां कर्पूरं (**Camphors**) इति वदन्ति।



कर्पूरः केवलं पूजाद्रव्यं एव न, अपि तु आरोग्य प्रदातुषु महत्तरेषु शक्तिवदौषधीन् निसिप्तं कृत्वा नानाविधानारोग्य समस्यानां परिष्कर्तुचास्ति। कर्पूरं सहज कर्पूरं कृत्रिमकर्पूरमिति द्विविधम् सहजकर्पूरमेव दैवहारतेः उपयोज्यम् ....



# मध्वाचार्य जयन्ति

अस्मिन् वर्षे अश्विनी शुक्लपक्षे दशमीदिने मध्वाचार्य जयन्ति दिनम्। त्रिमताचार्येषु तृतीयः मध्वाचार्यः। (विलम्बिनाम संवत्सरे) क्री.श.१२३८ संवत्सरे आश्वयुजमास शुद्धदशम्यां अयं जनिं लेभे। उडिपि पट्टणग्रामे पाजकक्षेत्र ग्रामे गेहभट्ट इति षीवल्लि ब्राह्मणः आसीत्। सः उडिपिस्थ अनन्तेश्वरस्वामि भक्तः। तस्य स्वामिनः चिरकालोपासनात् वायुदेवांशे एकः पुत्रः वासुदेवनामकः स्फुरद्रूपी बलशाली पुत्रः अजायत। सः स्वपञ्चमवर्षे अद्भुत कार्यमेकञ्चकार। कदाचित् गेहभट्टः एकस्माद्वर्तकात् वृषभं ऋणरूपेण स्वीचकार। ऋणधन प्रत्यर्पणाय धनाभावात् कालं यापयति स्म। पुत्रः वासुदेवः चुक्रबीजानि हस्तपरिमितानि ददौ। तानि ऋणधनाय दैवानुग्रहात् पर्याप्तान्यासन्। वर्तकः पर्याप्तं ऋणधनं लब्धमिति आनन्दभरितः निर्जगाम। अष्टमवर्षे उपनयनानन्तरं सर्वविद्यापारङ्गतः सन् उडुपि क्षेत्रे अच्युतप्रेक्षनामक यतिवर्यस्य शिष्यः बभूव। एकादशवर्षे सन्न्यासं स्वीचकार। पश्चात् पूर्णबोधनामकः सन् अनन्तेश्वरस्वाम्यालये वेदान्तविषये महापण्डितं पराजित्य पूर्णप्रज्ञः इति बिरुदमवाप। पश्चात् वेदान्तविद्याराज्यपट्टं प्राप्य आनन्दतीर्थः इति नामाप्यवाप।


**डा.एम.ईश्वरम्मा**

**चरवाणी - ८१०६५७८२५०**


शङ्कराचार्यस्य प्रस्थानत्रयभाष्यं व्यतिरिक्ततया विमर्शितवान्। व्यासस्य ब्रह्मसूत्राणां भाष्यं लिखितुं प्रारेभे। तत्प्रान्त दिग्विजययात्रां कृत्वा मुख्यशिष्येण सत्यतीर्थेन सह बदरीयात्रां कुर्वन्नेव ब्रह्मसूत्रभाष्यं सम्पूर्णञ्चकार। स्वदेशं पुनरागच्छन् गोदावरीतीरे कानिचिद्दिनानि यापयित्वा श्यामशास्त्रिणा मायावादे स्पर्धायां प्रचण्डवादं कृत्वा पराजितः, तस्य शिष्यः बभूव। तदा तस्य नाम पद्मनाभतीर्थः बभूव। ततः पद्मनाभतीर्थ - नरहरितीर्थशिष्याभ्यां उडुपिं गत्वा शिष्यै सह समुद्रस्नानं कृत्वा तत्र कृष्णस्तुत्या बहून् आशुश्लोकानवदत्। शिष्याः सत्यतीर्थादयः तान् श्लोकान् लिखन्ति स्म। शिष्यैः सह समुद्रतीरं गत्वा जलप्रवाहे अन्तर्गच्छन्नावं स्वकरवस्त्रं आलम्बनार्थं स्वहस्ताद्वायुद्वारा दूरीचकार। तदा करवस्त्रं नौकासमीपञ्चाजगाम। नौका च जलान्तः अमग्ना सती उपर्येव स्थिरा आसीत्। मध्वाचार्यस्य अद्भुतमाहात्म्यं ज्ञात्वा नौकाधिकारिणा दत्तं गोपीचन्दनं पर्याप्तं स्वीकृत्य आगच्छतिस्म। गोपीचन्दनं शिष्यैरानीयमानमासीत्। महाभारात् गोपीचन्दनात् बालकृष्ण विग्रहः दधिमन्थनदारुसाधनञ्च (मन्थनी) बहिरागतम्। ततः मध्वाचार्यः बालकृष्णविग्रहं स्तुवन् स्वकण्ठे प्रतिष्ठाप्य कृष्णपूजामाचरन् कृष्णपूजाविधानपरकं तन्त्रसारग्रन्थं व्यरचीत्।

पश्चात् द्वितीयवारं बदरीयात्रां कृत्वा प्रतिनिवृत्य उडुपिपट्टणे महापण्डितानपि शास्त्रस्पर्धायां पराजित्य बहून्

(अनुवर्तते१५)

# सप्तर्षीणां कवितायां सप्तगिरीशः

कश्यपः अत्रिः भरद्वाजः, विश्वामित्रः गौतमः, जमदग्निः, वशिष्टः इति सप्तर्षयः सहस्त्रयुगपर्यन्तं तपस्तेपिरे। तत्तपोबलात् अद्यापि नक्षत्रमण्डले प्रकाशन्ते। आकाशे रात्रौ उदीचि दिशि सप्तर्षिमण्डलं द्रष्टुं शक्यते।

एते सप्तर्षयः संघरूपेण यत्र कुत्रापि गच्छन्ति। यस्य कस्यापि लोकस्य तीर्थयात्रार्थं गच्छन्तः विशेषाश्चर्यजनकान् विषयान् चर्चां कुर्वन्तः सानन्दं कालं यापयन्ति स्म। तेषां सञ्चारः यात्राश्च लोककल्याणार्थमेव। नक्षत्रमण्डले तपोनिमग्नानामेतेषां युगपरिणाम एव न ज्ञायते। सहस्त्रयुगानन्तरं जागृताः ते लोकपरिभ्रमणमिच्छन्तः आदौ वैकुण्ठं, ततः कैलासं गन्तुं मेनिरे। पश्चात् तपोबलेन नक्षत्रमण्डलात् वैकुण्ठं गत्वा विष्णु मन्दिरद्वारं प्राप्ताः। तत्र द्वारप्रान्ते जयविजयौ स्वगदाभ्यां अन्तः प्रवेष्टुं अवरोधं कृत्वा स्थितावास्ताम्। तौ क्रीडानिमग्नौ चास्ताम्। सप्तर्षयः तद्दृश्यं दृष्ट्वा तौ क्रीडातः मनः परिवर्तयितुं गोविन्द! नारायण! वैकुण्ठवास! लक्ष्मीपते। इति उच्चैः शब्दमकुर्वन्। परध्यानात् जागृतौ तौ सप्तर्षीन् दृष्ट्वा नमस्कृत्य सहस्त्रवर्षेभ्यः पूर्वं भवद्दर्शनमासीत्। अद्य वैकुण्ठमागताः। सर्वज्ञाः भवन्तः कोपात् आवयोः शापप्रयोगं मा कुर्वन्तु। अद्य मत्प्रभुः विष्णुरत्र नास्ति। सहस्त्रवर्षाः अतीताः। कुत्र गतः इति आवां न जानीवः सत्यमिदमित्यवोचताम्।

आश्चर्यचकिताः ऋषयः कैलासे शिवमन्दिरं जग्मुः। तत्र दिगम्बरौ नीलवर्णेन विभूति लिप्तौ द्वौ शिवकिङ्करौ सप्तर्षीन् दृष्ट्वा भवन्तः के? ऋषिवद्दृश्यन्ते। भगवान् शिवः बहुयुगेभ्यः पूर्वमेव वृषभगणपतिषण्मुखैः सह कुत्रप्यगच्छत् वयं न जानीमः। भवन्तः एव ज्ञात्वा तत्सकाशं गच्छत इत्यवोचताम्। ततः सर्वे ऋषयः सत्यलोकं जग्मुः। तत्र सत्यलोकं शून्यमासीत्। प्रष्टुमपि एकोऽपि न दृष्टः। विफलप्रयत्नास्ते गच्छन्तः मार्गे देवर्षिः नारदं दृष्ट्वा परस्पराभिवादं चक्रुः।

ततः सप्तर्षीन् सम्बुध्य बहुसहस्त्रवर्षानन्तरं भवतां दर्शनमिति आश्चर्यं प्रकटीचकार। ततस्ते सहस्त्रवर्षपर्यन्तं नक्षत्रलोके तपो निमग्नाः, अद्य वयं त्रिमूर्तिदर्शनार्थं गताः। तेषु यः कोऽपि स्वलोके नास्ति इति तदाकर्ण्य नारदः "त्रिमूर्ति दर्शनाभावस्य हेतुमहं वदामि सावधानं श्रृणुत इत्येवमुवाच -



भूलोके भरतखण्डस्य दक्षिण भागे वेङ्कटाचल नामकः पर्वतः परमाद्भुतः लोकत्रये महिमान्वितः अनन्तः अप्रमेयः। तत्र दिव्यशिखरे वैकुण्ठपतिः श्रीमन्नारायणः वेङ्कटपतिनाम्ना वर्तते इति भवतां विदितपूर्वोऽयं विषयः। भक्तवत्सलस्य ब्रह्मणः अध्वर्ये अङ्गरङ्गवैभवतया ब्रह्मोत्सवनाम्ना दशदिनोत्सवाः प्रचलन्ति। अखिलाण्डकोटिब्रह्माण्डनायकस्य ब्रह्मोत्सववैभवं द्रष्टुं सर्वे लोकस्थाः भूलोक वैकुण्ठमागताः। अद्याप्यागच्छन्ति। तत्र साम्बशिवः वेङ्कटाचलक्षेत्रपालकः ब्रह्मा उत्सव निर्वाहकः। अतः अन्यसर्वलोकाः शून्याः भवन्ति। ध्याननिमग्नैः भवद्भिः अयं विषयः न ज्ञातः। तिरुमलब्रह्मोत्सवदर्शनार्थं आह्वानं भवतामागतमेव स्यात्। वयं अचिरमेव सप्तगिरीशिखरेषु पुनर्मिलामः इति वदन् नारदः नारायण नारायण इति भगवन्नामोच्चारणं कुर्वन् अदृश्यङ्गतः। ततः किञ्चिद्दूरगमनानन्तरं सप्तर्षिभ्यः गरुत्मान् प्रत्यक्षीभूय ब्रह्मोत्सवाह्वानपत्रं दर्शयन् हे महर्षयः। भवदर्थं नक्षत्रमण्डलं, लोकत्रयश्च अभ्रमम्। अद्य भवद्दर्शनभाग्यं सञ्जातम् धन्योऽहम्। ब्रह्मण्डनायकस्य ब्रह्मोत्सवदर्शनार्थं इदमेवाह्वनमिति वदन् झटित्येव अदृश्यङ्गतः।

ततः गरुत्मतः स्वागतवचनेन सन्तुष्टाः सप्तर्षयः आलस्यं मास्तु ब्रह्मोत्सववैभवं, कोटित्रयदेवताः, प्रार्थनाः स्वीकृत्य वाञ्छाफलप्रदायकं वेङ्कटेशञ्च द्रष्टुमद्यैव गच्छामः इति सप्तर्षयः क्षणकाले भूलोकवैकुण्ठमागताः।

सप्तगीरीणां शोभा -

सप्तर्षयः वेङ्कटाचले सप्तशैलाद्भुततेजः वीक्षन्तः प्रणामं चक्रुः। गिरिमध्ये विनूत्नकान्तिभिः महाद्भुततयो शोभायमान स्वर्णभवनानन्दनिलयविमानशिखरं साश्चर्यं सानन्दं नेत्रपर्वततया पश्यन्तः बहुवर्षानन्तरं महद्भाग्य मदृष्टं लब्धमिति भावयामासुः। श्रीवैकुण्ठं निश्शब्द गम्भीरं स्वल्पजनप्राप्य एव वेङ्कटाचलस्तु देवदानव मानवयक्षकिन्नर गन्धर्वादिसर्वलोकभक्तजनैः आनन्दसन्दोह पूर्णः नित्योत्सवैः प्रकाशमानः महावैभवोपेतः विराजते। अत्र ब्रह्मचारिणः, यतीश्वर योगिमन्त्रज्ञावधूत गृहस्थवानप्रस्थ बाल बालिका पुण्याङ्गना सुवासिन्यः, सामान्याधिकारिणः राज्याधिकारिणः लक्षशः भक्तवरेण्याः गोविन्दनाम घोषैः, नृत्यगानसङ्गीतनीराजनैः उपासनाभिः दीपप्रज्वलनैः वेङ्कटाचलं महासौन्दर्योपेतं कुर्वन्तः महाभक्ति भावपूरिताः सानन्दं परिभ्रमन्ति।

ब्रह्मोत्सववैभवम् -

श्रीवेङ्कटेशमतिसुन्दरमोहनाङ्गं
श्रीभूमिकान्तमरविन्ददळायताक्षं।
प्राणप्रियं प्रविमल सत्करुणाम्बुराशिं
ब्रह्मेशवन्द्यममृतं वरदं भजामि।।

एवं प्रार्थयन्तः सप्तर्षयः साम्बशिवस्य क्षेत्रपालकपर्यवेक्षणे चतुर्मुखस्य ब्रह्मणः आध्वर्ये सकललोकवासिसमक्षे प्रवर्तमानाखिलाण्डकोटि ब्रह्माण्डनायकस्य ब्रह्मोत्सवान् आद्यन्तं पश्यन्तः मधुरदिव्यप्रासादान् आस्वादयन्तः संतृप्ति लेभिरे।

श्रीनिवासस्य ब्रह्मोत्सवेषु ध्वजारोहणमारभ्य प्रत्यहं उदये रात्रौ प्रवर्तमान आदिशेष, लघुशेष, हंस-सिंह मौक्तिक, कल्पवृक्ष, सर्वभूपाल, मोहिन्यवतार, गरुड हनुम- गजसूर्यप्रभाचन्द्रप्रभास्वर्णरथोत्सवान् अन्ते अश्वावाहनञ्च सप्तर्षयः नेत्रपर्वतया ददृशुः। अनन्तरदिने स्वामि पुष्करिण्यां चक्रस्नाने भागं गृहीतवन्तः।

स्वामिपुष्करिणीस्नानं वेङ्कटेश्वरदर्शनं।
महाप्रसाद स्वीकारः त्रैलोक्ये दुर्लभम् ।।

स्वामिपुष्करिणी पुण्यजलानि दिव्यौषधयः एव। श्रीवेङ्कटेश्वरः मृत्युरोगादिपरिहारकः अद्भुतभिषकं स्वामि पुष्करिणीस्नानं स्वामिदर्शनं। स्वामिप्रसाद स्वीकरणं त्रीणि, कार्यान्यनन्तफलप्रदायकानि। अदृष्टवशात् एतद्भाग्यं लब्धमिति सप्तर्षयः पुष्करिणीतीर्थे सुदर्शनचक्रेण साकं स्नानं चक्रुः। पश्चात् आनन्दनिलय गर्भालये नित्यमङ्गलमूर्तिं वेङ्कटेश्वरं अविस्पन्दनेत्राभ्यां दृष्ट्वा आनन्दमवापुः। मङ्गलप्रद ब्रह्मोत्सवानन्तरं श्रीपतिमहामणिमण्टपे आस्थानं प्रचलितम्। उत्सवागतभक्तेभ्यः अनुगृह्य वेङ्कटपतिः कानिचिद्वराणि ददौ। तदा सदाशिवः ब्रह्मा च सप्तर्षीन् एवमपृच्छताम् - अखिलाण्ड ब्रह्माण्डनायकस्य ब्रह्मोत्सवान् दृष्टवन्तः भवन्तः। कल्याणवेङ्कटेश्वरदर्शनेन कीदृशी अनुभूतिः भवतां लब्धा। श्रीनिवास भगवान् एकोऽपि एकैकस्यापि भिन्नभिन्नदर्शनं भिन्नभिन्नानुभूतिश्च ददाति। दर्शनानुभूतयः भिन्ना एव। हे सप्तर्षयः। स्वामिदर्शने भवता अनुभवानुभूतीः एकैकशः एकस्मिन् श्लोके स्वनामाद्यक्षरेण प्रारभ्य संक्षिप्ततया वक्तव्यमिति। अनन्दनिलये कोटित्रयदेवताः। देवदानवयक्षकिन्नरकिंपुरुषमानवाः, सप्तर्षयः कथं स्वानुभूति श्लोके वदेयुरिति पश्यन्ति स्म। तदा सप्तर्षयः सप्तगिरीशाय साष्टाङ्गदण्डप्रणामं चक्रुः। पश्चात् भगवान् श्रीनिवासः लक्ष्मीसमेतः मन्दहासं कुर्वन् स्वानुभूतिं वदन्तु इति अनुमतिं ददौ।

आदौ कश्यपमहर्षिः

१.कादिह्लीमन्तविद्यायाः प्राप्यैव परदेवता।
कलौ वेङ्कटेशाख्या तामहं शरणं भजे।।

क आरभ्य ह्ली अक्षरेण परिसमाप्यं षोडशाक्षर रहस्यस्य मन्त्रस्य प्रधानां परदेवता अस्मिन् कलियुगे श्रीवेङ्कटेश्वररूपेण दर्शनं ददाति। तस्याः परदेवतायाः अद्य वेङ्कटेश्वररूपेण दर्शन - भाग्यमहं कश्यपः प्राप्य शरणं भजे।

पश्चात् अत्रिमहर्षिः दण्डप्रणामं कृत्वा एवमुवाच-

अकारादि क्ष कारान्त, वर्णैः यः प्रतिपाद्यते।
कलौ स वेङ्कटेशाख्यः शरणं मे रमापतिः।।

२. अकारादि क्षकारान्ताक्षरेषु प्रतिपादितरमापतिः अस्मिन् कलियुगे श्रीवेङ्कटेश्वररूपे दर्शनं ददाति। अत्रिरहं स्वामिनं शरणं प्रपद्ये।।

पश्चात् भरद्वाजः उत्थाय एवं वदति।

भगवान् भार्गवीकान्तो भक्ताभीष्टदायकः।
भक्तस्य वेङ्कटेशाख्यो भरद्वाजस्य मे गतिः।।

भार्गवी नाम लक्ष्मीः साक्षात् भार्गवीकान्तः श्रीनिवासः भक्तानां अभीष्टं पूरयति। तादृशं वेङ्कटेशं भरद्वाजः अहं शरणं प्रपद्ये।

पश्चात् विश्वामित्रः वेङ्कटेश्वरं एवं वदति।

विराट् विष्णुः विधाता च विश्वं विज्ञान विग्रहः।
विश्वामित्रस्य शरणं वेङ्कटेश विभुस्सदा।।

विराट् पुरुषः श्रीमहाविष्णु एव अद्य श्रीवेङ्कटेश्वरः। स एव विधाता विज्ञानविग्रहस्य श्रीनिवासस्य स्वरूपमेव इदं विश्वम्। तादृशं जगत्प्रभुं श्रीवेङ्कटेशं विश्वमित्रः अहं शरणं प्रपद्ये। पश्चात् गौतममहर्षिः एवं वदति -

गौः गिरीशप्रियो नित्यं गोविन्दो गोपतिर्विभुः।
शरणं गौतमस्यास्तु वेङ्कटाद्रिशिरोमणिः।।

गौरीप्रियः परमेश्वरः! तस्य अत्यन्त प्रियः गोविन्दः गवां पालकः गोपिकानां पतिः समस्त जीवानां विभुः। सर्वदा भासमानः अद्य वेङ्कटाद्रिशिरोमणित्वेन दर्शनं ददच्छ्री निवासं भगवन्तं गौतमोहं शरणं प्रपद्ये।

पश्चात् जमदग्निः एवं स्तौति।

जगत्कर्ता जगद्भर्ता जगद्धर्ता जगन्मयः।
जमदग्निः प्रपन्नस्य जीवेशो वेङ्कटेश्वरः।।

समस्तजगतां नायकः कर्ता, पोषकः भारवाहकः, धरणकार्यकर्ता वेङ्कटेश्वर एव। एवं सर्वरूपेषु भासमानः विश्वव्यापकः, जगन्मयः, सकलजीवेशः यः तं अहं जमदग्निः शरणं प्रपद्ये। अन्ते वसिष्ठः एवं स्तौति -

वस्तुविज्ञानमात्रं यन्निर्विशेषं शुभञ्च सत्।
तत् ब्रह्मैवाहमन्वीति वेङ्कटेशं भजे सदा।।

आश्रितभक्तानां सम्पर्णसर्वशुभानि ददानः साक्षात् परब्रह्मतत्त्वमिव प्रकाशमानं भगवन्तं अयं वशिष्ठः नित्यं भजते।

एतात् श्लोकान् श्रुत्वा सभास्थाः ब्रह्मादिदेवाश्च अभिननन्दुः।

पश्चात् श्रीवेङ्कटेश्वरः मन्दस्मितवदनारविन्दः भक्तान् सप्तर्षीन् च दृष्ट्वा महर्षीनुदिश्य भवत्कृतस्तोत्राणि महिमान्वितानि। एतान् श्लोकान् पठतां पारायणं कृतवतां सकलभयदोषानाशः स्यात्। सर्वशुभसम्पत्तिभिः ते वर्धिष्यन्ति। इति वदन् रत्नाम्बरैः सप्तर्षीन् सत्कृत्य आशीर्ददौ। एवं सप्तर्षिकृत स्तोत्राणि भगवतः, प्रीतिकारकानि, भक्तभवतारकानि सर्वविजयसिद्धिदानि भविष्यन्तीति एवं ब्रह्मादिदेवाः प्रोवाचुः -

सप्तर्षिरचितं स्तोत्रं
सर्वदा यः पठेन्नरः।
सोऽभयं प्राप्नुयात्सत्यं
सर्वत्र विजयी भवेत्।।

एवं सप्तर्षयः भूलोक वैकुण्ठयात्रां सिद्धिप्रदां कृत्वा वैकुण्ठे दिव्ये स्वानुभूताध्यात्मिकरसानन्दं भावयन्तः नक्षत्रमण्डलं प्रापुः। एवं सप्तगिरीशः स्तोत्राणि अद्यापि भक्तानां प्रीतिकारकानि भवन्ति।

नमः श्रीवेङ्कटेशाय शुद्धज्ञानस्वरूपिणे।
वासुदेवाय शान्ताय श्रीनिवासाय मङ्गलम्।।

तेलुगुमूलम् - जूलकण्ठि बालसुब्रह्मण्यम्

संस्कृतानुवक्ता - डा.के.कोटेश्वरय्या

(दशमपुटात्)

उत्तमग्रन्थान् व्यरचीत्। व्यायामात् सुस्निग्धकायः मध्वाचार्यः भीमसेनस्य अपरावतारः वृकोदरः इति प्रशस्तिमवाप। अस्य वृकोदरत्वनिदर्शनतया द्वौ उदन्तौ वर्तेते। प्रत्यहं सः विष्णुमङ्गल ग्रामे भिक्षां स्वीकृत्य विश्रमति स्म। कदाचित् परीक्षार्थं गृहस्थेन एकेन शतद्वयरम्भाफलानि खातुं दत्तानि। सर्वाणि अवलीलया एकवारमेव मध्वाचार्यः चखाद। अन्यस्मिन् दिने इषुपात्र ग्रामे भक्तेन दत्तानि सहस्रकदलीफलान्यपि एककारमेव चखाद।

कदाचित् सत्यतीर्थेन शिष्येण सह अटवीमार्गे गच्छतिस्म। व्याघ्रः कश्चिदागत्य सत्यतीर्थोपरि पतितुमतिसमीपमाजगाम। सत्यतीर्थः तद्दृष्ट्वा मूच्छितः। आचार्यः तद्व्याघ्रोपरिबलं प्रदर्श्य मुष्टिघातश्चकार। सः व्याघ्रः मुष्टिघातैः असून् तत्याज। ततः सत्यतीर्थः मूर्च्छायाः जागृतः आसीत्। कदाचिदाचार्यः कडूममण्डले मुद्रिग्रामे तुङ्गभद्रानदीतीरे अम्बुतीर्थतीरे तिर्यक् स्थितां महतीं शिलां दृष्ट्वा तद्विषयं स्थानिकान् अपृच्छत्। स्नानाचरणस्थाने नद्यां तीव्रतां रोद्धुं महाशिला बहुजनैः तीरपर्यन्तं चक्रमिव भ्रामयद्भिरानीता। तीरात् पश्चात् किञ्चिद्दूरमपि चालयितुमशक्ताः। तस्मात्कालात् प्रभृत्यैव शिला वर्तते इति आचार्यं समादधुः। आचार्यः तदाकर्ण्य अवलीलया महाशिलां हस्तेन उत्थाप्य आवश्यकस्थाने निवेशयामास। सर्वे तद्दृष्ट्वा आश्चर्यचकिताः आसन्। तस्य शिलायाः उपरि मध्वाचार्येण, एकहस्तेन आनीय स्थापितशिलेति लिखिताक्षराणि तस्य बलमद्यापि ज्ञापयन्ति।

कदाचित् उडिपिनगरे पूर्ववारमण्डकर नामक सहोदरयोः गण्डवाटः त्रिंशज्जनानीत ध्वजस्तम्भमहमेक एव उत्थाप्य श्रीकान्तेश्वरदेवालयमानीतवानिति स्वबलमाचार्याय प्रोवाच। तदा आचार्यः स्वकण्टं तं मर्दयितुमपृच्छत्। आदौ मृदुरपि कण्ठः शिलेव महाकठिनः अजायत। पूर्ववाटगण्ड - वाटावुभावपि कण्ठं मर्दयितुमशक्तौ, स्वेदार्द्रशरीरौ मूर्च्छितौ।

मध्वाचार्यः श्रीकृष्णामृतमहार्णवः, कर्मनिर्णीयः, गीताभाष्यम्, ब्रह्मसूत्रभाष्यं, दशोपनिषद्व्याख्यानम्, महाभारततात्पर्यनिर्णयः, इत्यादिबहुग्रन्थान् विरच्य पिङ्गलनाम संवत्सरे मार्गशुद्ध नवम्यां क्री.श.१३१७ वर्षे दिवङ्गतः। एकोनशीति वर्षे आचार्यः अष्टमठान् स्थापयामास। वैष्णवबोधकेषु वीराग्रगण्याः एते हिन्दूमतविकासाय उपकृतवन्तः। स्वयमेव वायुदेवस्य अहं तृतीयावतारः इत्युक्तवन्तः। विश्वविख्यात द्वैतसिद्धान्तं लोकाय दत्वा भक्तितत्त्वस्य नूतनोज्ञीवं कल्पयामासुः। एतेषां सन्देशमेव श्रीकृष्णचैतन्यादि महानुभावैः प्रचार्यते।

मध्वाचार्यद्वैतमतसिद्धान्तः - मध्वदर्शने जीवः ब्रह्मा द्वौ एकः न। द्वयोर्मध्ये सदा भेदः वर्तते। ब्रह्मणः इव जीवे चैतन्यानन्दगुणयोः विद्यमानत्वेपि ब्रह्मानिरतिशयानन्दः जीवे परिमितानन्दः भवति। चैतन्यं आनन्दश्च जीवस्य यथार्थगुणौ। शङ्करदृष्ट्या। जीवस्य प्रत्येक स्थानं नास्ति। मध्वाचार्यदृष्ट्या जीवस्य प्रत्येकस्थानं वर्तते। जीवः शाश्वतः। जीवस्य नित्यानन्दानुभवस्य नामरूपे स्तः। जीवस्य आकृतिः अवश्यं भवति। जीवः ईश्वरप्रतिबिम्बः एव। सः प्रतिबिम्बः सोपाधिक प्रतिबिम्बः निरुपाधिक प्रतिबिम्बः इति। जीवः निरूपाधिकबिम्बः। जीवः ईश्वरांशसम्भूत एव न ईश्वरः। सत्यज्ञानानेतान्दाः तस्य कल्याणगुणाः। परन्तु एते गुणाः रेखामात्रेण जीवे वर्तन्ते। जीवः नित्यः शाश्वतः। ईश्वरस्य शाश्वतत्त्वे सति प्रतिबिम्बोऽपि शाश्वतः। शरीर शरीरि अग्निविस्फुलिङ्गन्यायवत् जीवः ईश्वर प्रतिबिम्बः।

द्वैतसिद्धान्ते मोक्षसिद्धान्तः - १. ईश्वरः २. जीवः ३. प्रकृतिः अथवा भौतिकपदार्थः इति मोक्षः तत्त्वत्रयाधारितः भवति। बन्धावस्थायां मोक्षावस्थायां जीवेश्वरयोः भेदः अस्त्येव। मोक्षस्वरूपे मोक्षफलिते तारतम्यत्वात् मोक्षप्राप्तिः भिन्न भिन्न दशासु जीवराशेः वर्तते। जीवः कष्टदशासु दुःखमग्नः सन् बद्धो भवति। बन्धविनाशः एव मोक्षः इति मध्वाचार्यमतम्।



श्री न च रघुनाथाचार्यप्रणीता

# श्रीशेषाद्रीशस्तुतिः

व्याख्याता - डा. कन्दाल लक्ष्मीनारायणः
चरवाणी - ९९८५२३७३५३

(तदनन्तरम्)

## निरन्तरा भक्तिरस्तु

श्लो.१७.

आश्रित्य यत्पदसरोजयुगं बुधानां
सोऽयं भवाब्धिरपि पल्वलवत् विलङ्घ्य
शेषक्ष्माधरपतौ प्रचकास्तु तस्मिन्
आदेहपातमनिरूद्धगतिः मति र्मे।।

**ता -** श्रीशेषाचलाधीशस्य वेङ्कटनायकस्य दिव्यपादारविन्द युगलस्य आश्रयणेन भक्ताः सर्वे अतिमहान्तं दुस्तरम् अपि संसारसागरम् अल्पसरः इव अनायासेन तीर्त्वा पारभूतं मोक्षपदं प्राप्नुवन्ति। तस्मिन् परमपुरुषे श्रीनिवासे मे मनः आजीवितान्तं निरन्तरं सक्तं भवतु।।

**सु.सौ.व्याख्या -** पूर्वश्लोके वेङ्कटाद्रीशदावाग्नि रिव दुरितवनं नाशयति इत्युक्तम्। इदानीं तदाश्रितानां संसारसिन्धुः पल्वलमिव सुतरो भवतीति तस्य तरणोपायता प्रस्तूयते।

**पदसरेजयुगम् -**

पदे सरोजे इव पदसरोजे। तयोः युगम् पद्मसदृशयोः पादयोः युगलम् इत्यर्थः। वेङ्कटेशस्य पादयोः सरोजसादृश्य-वर्णनात् - ते अम्बुजे इव अत्यन्तं योग्ये प्राप्ये च इत्यर्थः सूच्यते। अरविन्दात् यथा भोग्यो मकरन्दः स्रवति तथैव विष्णुपादाम्बुजात् स्रवन्ती मन्दाकिनी नदी अपि लोकान् पावयति।

हरिचरणसरोजस्य परमभोग्यता सनिदर्शनं संस्तुता यामुनाचार्यैः स्तोत्ररत्ने -

तवामृतस्यन्दिनि पादपङ्कजे निवेशितात्मा कथमन्यदिच्छति।
स्थितेऽरविन्दमकरन्दनिर्भरे मधुव्रतो नेक्षुरकं हि वीक्षते।।- २७.



- हे भगवन्! अमृतस्राविणि तव पादपद्मे अर्पितचितो जनः लौकिकम् अन्यत् किमपि वस्तुजातं न अभिलषति। मधुना परिपूर्णं पुरः स्थितं कमलं परित्यज्य मधुकरः इतरक्षुद्रपुष्पं आशया न वीक्षते खलु।

**बुधानाम् -** वासुदेव स्सर्वम् भ.गी. इति उक्तरीत्या प्रापकः, प्राप्यश्च सर्वे हरिरेव इति निश्चयं प्राप्य सर्वथा तमेव उपासितवन्तः ज्ञानिनः। तथैव ''मामेव ये प्रपद्यन्ते मायाम् एतां तरन्तिते' - भ.गी. इति भगवतः उपदेशं मनसिकृत्य तमेव शरणं प्रपन्नाः विवेकिनः अत्र बुधाः इत्युच्यन्ते।

**भवाब्धिः..... विलङ्घ्यः -** भवः अब्धि इव भवाब्धिः। समुद्रसदृशः संसारः। सागर यथा तिमिङ्गिलादि जलजन्तवः, अतिगम्भीरं पानाय अयोग्यं च जलम् झंझावाताहताः तरङ्ग पङ्क्तयः, आकर्षकाः आवार्ताः च वर्तन्ते, तथैव संसारेऽपि पुत्रादयः, विविधाः आशाः, अनेकाः मोहपङ्क्तयः, भार्यादिबन्धुजनाः परिवृत्य जनं संसारात् उद्गन्तुम् उज्जीवितुं च निरून्धन्ति। तादृशः अतिभयङ्करो दुस्तरः संसारजलधि श्रीवेङ्कटेश्वरस्वामिनः पादयुग्मसमाश्रयणेन अल्पं सर इवि अतिक्रान्तुं शक्यते। देवदेवः एव स्वभक्तान् भवसागरं अतिसुखेन तारयति इति भावः।

अत्र इयं कुलशेखरसूरेः सूक्तिः स्मरणीया -

भवजलधिमगाधं दुस्तरं निस्तरेयं
कथमहमिति चेतो मा स्म गाः कातरत्वम्।
सरसिजदृशि देवे तावकी भक्तिरेका
नरकभिदि निषण्णा तारयिष्यत्यवश्यम्।।

**मुकुन्दमाला-१३ -** - हे मानस! त्वम् अगाधम् अतिक्रान्तुम् अश्क्यं भवजलधिं कथं तरेयम् इति मा भैषीः। तव पुण्डरीकाक्षे श्रीहरौ विद्यमाना भक्ति रेव त्वां संसारसागरं तारयिष्यति - इति - तथैव

एवमेकाग्रचित्तस्सन् संस्मरन् मधुसूदनम्।
जन्ममृत्यु जराग्राहं संसाराब्धिं तरिष्यति।।

- यो जनः एकाग्रेण मनसा मधुसूदनं ध्यायति स भक्तः जन्ममरणावार्धकरूपैः जलजन्तुभिः परिवृतं भवसागरम् अत्येति इति पुराणेषु विष्णुभक्तानां संसारसिन्धुतरणम् अभिहितम्।

पल्वलं नाम अल्पं सरः। ''वेशन्तः पल्वलं चाल्पसरः' १.१०.२८ इत्यमरनिघण्टुः। जलधिमिव स्थितम् अपारं संसारं विष्णुभक्त अल्पंसर इव अनायसेन तरति इति भावः। तस्य संसार यात्रायां न कोऽपि क्लेशः भवतीति तात्पर्यम्।

**आदेहपातम् अनिरूद्धगतिः मे मतिः -** मम बुद्धिः मरण पर्यन्तं श्रीनिवासे एव निश्चलतया संसक्ता भवतु इति प्रार्थ्यते। मध्ये अन्येषु लौकिकविषयेषु संलग्ना माभूत् इति निरन्तरं स्वामि विषये एव मे भक्तिः भूयात् इति च भावः। भक्तिः नाम तैलधारा इव अविच्छिन्न भगवच्चिन्तनपरम्परा एव। सा च आजीवितान्तं सर्वदाऽपि मोक्षाभिलाषिणा करणीया। यावदायुः पूर्तिः तावत् पर्यन्तं मोक्षसाधनम् उपासनं कर्तव्यमेवेति विहितं छान्दोग्योपनिषदि -

''स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकम् अभिसम्पद्यते -८.१५.१- ब्रह्मोपासकः तत्प्राप्तर्यम् उपासनं मरणपर्यन्तं कुर्वन् ब्रह्म प्राप्नोति इति।

तदेवोक्तं सूत्रकारेण च - ''आप्रयाणात् तत्रापि हि दृष्टम्'' ब्र.सू-४.१.१२- एवं वर्तयन् यावदायुषम् इति श्रुतौ उक्तत्वात् उपासकः तादृशम् उपासनम् आमरणात् अनुवर्तयेत् एव - इति। अतः श्रीनिवासे भक्तिरूपापन्नं ज्ञानं मरणपर्यन्तं लौकिकविषयैः अव्याहततया निरन्तरं प्रवर्तताम् - इति अत्र विज्ञाप्यते। आदेहपातम् इत्यत्र देहस्य पातः पतनं देहपातः मरणम् इत्यर्थः। देहपातम् अभिव्याप्य इत्यर्थे आङः देहपात शब्देन ''आङ्.मर्यादाभिविध्योः' अष्टा.२.१.१३- इति सूत्रेण अव्ययीभावसमासः। देहपातपर्यन्तम् इत्यर्थः। मरणसमयेऽपि भक्त्यनुवृत्तिः, तत्कार्यं चिन्तनादिकं च प्रार्थनीयमेव। ''अवधीरितशारदारविन्दौ चरणौ ते मरणेऽपि चिन्तयामि'' - मुकुन्दमाला - ६ - इति अभियुक्तोक्तिः।

अनिरूद्धागतिः यस्याः सा अनिरूद्धगतिः। भगवच्चिन्तनकर्मणि अवारितप्रवृत्तिमती प्रवाह इव निरन्तर गमनशीला बुद्धिः मे भवतु इति प्रार्थ्यते।।

श्लोकोऽयं वसन्ततिलकावृत्ते निबद्धः। ''उक्ता वसन्ततिलका तभजा जगौ गः'' - इति तल्लक्षणम् उक्तम्।

(अनुवर्तिष्यते)

# वाल्मीकिजयन्ति

- आचार्य जि.पद्मनाभम्
चरवाणी - ९२४७३२८२८६



तमसानदीतीरे अटव्यां कदाचित् सप्तर्षयः किरातग्रामे किरातेन रुद्धाः बहुहिंसाबाधिताः पश्चात् तस्मिन्नेव करुणया तत्त्वबोधं कृत्वा राममन्त्रं प्रतिलोमतया उपदिश्य हिमवन्नगं गताः।

सः किरातः मानसिकपरिवर्तनेन महादीक्षतया राममन्त्र जपेन तपःकुर्वन्नासीत्। तपसः निवर्तयितुं भार्यापुत्रादयः कृत प्रयत्नाः विफलाः सञ्जाताः इन्द्रप्रेषिता ऊर्वश्यपि तपोभङ्गं कर्तुमशक्ता बभूव। सः अभङ्गध्याननिष्ठायामेवासीत्। तदुपरि वल्मीका वृक्षाः अजायन्त। सः प्रदेशः ऋष्याश्रम इव अदृश्यत। हिमवन्नगं गताः सप्तर्षयः प्रतिनिवृत्य किरातग्रामसमीपे पूर्वदृष्टं किरातमपश्यन्। तदा अशरीरवाणी वाल्मीकिः महादीक्षया तपः करोतीति श्रुता। वल्मीकस्थः किरातः बहिरागत्य सप्तर्षीन् नमस्कृत्य आतिथ्यं ददौ। तदा ते ऋषयः रामनामप्रभावं उपदिश्य गताः। सः किरातः वल्मीकात् बहिरागतः इति वाल्मीकिनाम्ना प्रसिद्धिं गतः। तस्य तपसा सन्तुष्टः साक्षात् श्रीराम एव प्रत्यक्षीभूय स्वचरितं रचयितुमादिदेश। तदा वाल्मीकिः जगन्मङ्गलप्रदं रामायणं व्यरचीदिति एका गाथा वाल्मीकिचरित्रग्रन्थे दृश्यते (क्री - १५८ काल सम्बन्धि रघुनाथनायक विरचितं वाल्मीकि चरितम्)।

केषुचित्पुराणेषु वाल्मीकिः वरुणदेवस्य दशमपुत्रः इति कथितम्। प्रचेतसः पुत्रः प्राचेतसः इति रामायणे दृश्यते। ब्रह्मणः पुत्रः इति उत्तर रामायणे वर्तते। ब्रह्मणः शापात् किरातवंशे जातः इति रामायणवचनम्। दुर्मार्ग स्नेहात् दुर्मार्गो भूत्वा बहुसन्ततिकुटुम्बपोषणार्थं चौरहिंसादिपापकृत्यानि आचरन् नारदादिसप्तर्षीन् पीडयितुमयतत। तदा तस्य ज्ञानोदयाय, त्वया कृतेषु पापेषु कुटुम्बे, भार्यापुत्रादीनां भागस्वाम्यमस्ति वा नवेति प्रष्टुं गृहं प्रेषितः। तदा गृहस्थाः भार्यापुत्रादयः कुटुम्बपोषणभारः यजमानिनः एव।

त्वत्कृते पापे वयं भागस्वामिननः न स्याम इति उक्तवन्तः। तद्वचनं श्रुत्वा महर्षिसकाशं गत्वा पश्चात्तप्तः एतावत्पर्यन्तं बहूनि पापकार्याव्याचरम्। तरणोपायं उपदिशन्तु इति तान् पप्रच्छ। तदा तैः उपदिष्टराममन्त्रः तपोदीक्षानिमग्नः आसीत्। तदुपरि वल्मीकं प्रवृद्धमासीत्। बहु वर्षानन्तरं वाल्मीकादृषिभिः बहिरानीतः। ततः आश्रमं निर्मीय बहुशिष्यपरिवृतः कालं यापयन्नासीत्।

कदाचित् मुख्यशिष्येन भरद्वाजेन सह तमसा नदीं स्नानार्थं गच्छन् मार्गमध्ये एकस्मिन् वृक्षे मैथुन्यक्रीडायां क्रीडन्तौ क्रौञ्चपक्षिणौ अपश्यत्। अकस्मात् शबरः आगत्य तयोरुपरि, बाणं मुमुञ्च। तद्बाणाघातात् पुरुषपक्षी अधः पतितः रक्तसिक्तः देहं तत्याज। तद्दृश्यं दृष्ट्वा हाहा कारान् कुर्वन्ती स्त्रीपक्षिणी रुदन्ती सापि अम्रियत।

एतत्सर्वं दृष्ट्वा क्रोधकारुण्येन शबरं तं महापरुषवाक्यैरेव शशाप। वाल्मीकिमुखादकस्मात् "मा निषाद! प्रतिष्ठां त्वमगमः शाश्वतीस्समाः। यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम्" (बालकाण्डः।) इति अनुष्टुप्छन्दसि श्लोकः आगतः। पश्चात् किरातं निन्दितवानहमिति पश्चात्तप्तः आसीत्। पश्चात् तमसानद्यां स्नात्वा आश्रममागतः दैनन्दिनविध्युक्त धर्मानाचरति स्म। हठात् सृष्टिकर्ता ब्रह्मा प्रत्यक्षीभूय "अकस्मात् छन्दोबद्धः श्लोकः त्वन्मुखादागतः। अस्मिन्नेव छन्दसि नारदोक्तप्रकारं धर्मात्मनः सकलसद्गुणसम्पन्नस्य श्रीरामस्य चरितं वर्णयेत्युक्त्वा अदृश्यङ्गतः। वाल्मीकिः

स्वशिष्यं भरद्वाजमुद्दिश्य ''पादबद्धोऽक्षरसमः तन्त्रीलय समन्वितः। शोकार्तस्य प्रवृत्तो मे श्लोको भवतु नान्यथा'' इत्यवोचत्। ततः ब्रह्मणः उपदेशं आदेशमिव वाल्मीकिमहर्षिः रामायणमहाकाव्यं समानाक्षर पादैः विशेषदत्तैः कैशिकीवृत्यां गम्भीरार्थपदैः सुलभभावगम्यैः चतुर्विंशतिसहस्रश्लोकात्मना बाल, अयोध्या, अरण्य, सुन्दर किष्किन्ध युद्ध - उत्तरकाण्डात्मना सप्तधा विभज्य व्यरचीत्। मनोज्ञ शब्दार्थालङ्कारशोभितमहाकाव्यलक्षणे व्यास कालिदासादिकवीनां मार्गदर्शकमिदं रामायणं आदिकाव्य प्रथमवाप।

**यावत्स्थास्यन्ति गिरयः सरितश्च महीतले।**
**तावद्रामायणकथा लोकेषु प्रचलिष्यति।**

इत्युक्तरीत्या त्रेतायुग रामकथा भारते देशान्तरेषु च सुप्रसिद्धा महिमान्विता राजते। धर्मस्वरूपस्य श्रीरामस्य आलयाः ग्रामे ग्रमे पट्टणेषु भारते भारतीयैः पूज्यमानाः वर्तन्ते।

वाल्मीकिः कथापरिणामाणां अवकाशं अदत्वा प्रतिसहस्रश्लोकारम्भे गायत्रीमान्त्राक्षराणि निबन्ध। अतः गायत्रीमन्त्रनिबद्धत्वात् महा पवित्रं सर्वपाठ्यं रामायणमिदम् क्रिस्तोः पूर्वं अष्टमशताब्दीतः तृतीयशताब्दीमध्यकाले विरचितमिदं बहुचारित्रकानामभिप्रायः।

**जीवनवृत्तेभिन्नाभिप्रायाः -** वाल्मीकिः पूर्वे जन्मनि भृगुगोत्रे अग्निशर्म नामकब्राह्मणः आसीत् सः कदाचित् नारद सकाशं गत्वा तस्माद्धर्मोपदेशं प्राप्तः रामनाम बहुवर्षपर्यन्तं जपन् परितः उपरि च वल्मीके अभिवृद्धे वल्मीकात् बहिरागतः इति तस्मादेव कालाद्वाल्मीकिमहर्षिरिति आहूतः इति वदन्ति। महाज्ञानसम्पन्नः सः नारदात् बहुशास्त्राण्यधीत्य आश्रमे बहुशिष्य समेतः आसीदिति एका गाथा श्रूयते।

स्कान्दपुराणे नारदखण्डे मुखरतीर्थे लोहजंघ नामक ब्राह्मणः बभूव। पितृभक्तः सः सुन्दरीं कन्यां परिणीय अन्योन्या - नुरागतया धर्मबद्धदाम्पत्यजीवितं यापयति स्म। कदाचित् बहुवर्षपर्यन्तं अनावृष्टिरासीत्। तदा क्षुत्बाधापीडितः भार्यापुत्रान् पोषायितुमशक्तःतत्पोषणाय अटव्यां चोरहिंसावृत्तिप्रविष्टः आसीत्। कालान्तरे सप्तर्षिषु पुलहः राममन्त्रमुपदिदेश। तन्मत्रध्यानेन अष्टसिद्धीरप्यवाप्य महर्षित्वेन जगत्प्रसिद्धिमवाप।

रामायणे उत्तरकाण्डे वाल्मीकेः महत्प्रामुख्यं दृश्यते। रामायणोत्तरकाण्डः वाल्मीककृतः न भवतीति पाश्चात्यानामभिप्रायः। शेषरामायणादियं कथा स्वीकृतेति केचिद्वदन्ति। लोकनिन्दाभीतेन रामेण सीतापरित्यागानन्तरं सीता गङ्गातीरे वाल्मीकिशिष्यैराश्रममानीता। तत्परिरक्षणे एव लवकुशौ पुत्रौ सुषुवे। वाल्मीकिः सर्वविद्याः बोधयित्वा रामायणकथाञ्च तावत्पर्यन्तं गानयोग्यानुसारं पाठयामासेत्यत्र वर्णितकथा दृश्यते।

**लवकुशगीतामकथा माधुर्यम् : -**

''अहो गीतस्य माधुर्यं - श्लोकानाञ्च विशेषतः चिरवृत्तमप्ये तत् प्रत्यक्षमिव दर्शितम्''

**महाभारते वाल्मीकिप्रस्तावना :-** महाभारतकाले वाल्मीकिरासीदिति महाभारत युद्धानन्तरं धर्मराजसकाशं गतेषु बहुमहर्षिषु अयमेकः इति सः धर्मराजाय शिवोपासनाप्रयोजनमाहात्म्यादीनि उपदिदेशेति एका कथा वर्तते। कदाचित् होम निर्वाहकाः अर्चकाः ब्राह्मणत्वविषये दोषमारोप्य शापं ददुरिति। तदा शापानन्तरं वाल्मीकिः शिवमाराध्य सर्वपापविमुक्तः आसीत्। तदनन्तरमेव यथाहं शिवराधनया पापन्मुक्तः त्वमपि तथा शिवमाराध्य पापविमुक्तः भवेत्युपदिदेशेति कथा वर्तते। विष्णुधर्मोत्तरपुराणमनुसृत्य वाल्मीकिः ब्राह्मणवंशे त्रेतायुगोत्पन्नः रामायणं व्यरचीदिति ज्ञानार्जनार्थं अवश्यं रामायणं पठित्वा वाल्मीकिपूजा कर्तव्येति प्रोक्तम्। वाल्मीकिरेव तुलसीदासरूपेण जन्म गृहीत्वा हिन्दीभाषायां रामचरितमानसं व्यरचीदिति तत्रैव प्रोक्तम्।

हैन्दवानां आश्वयुजमासे पौर्णमीतिथिः वाल्मीकेः वार्षिक जन्मदिनमिति वाल्मीकिजयन्ति अपि तस्मिन्नेव दिने आचरणीयमिति वदन्ति।

वाल्मीकिपूजादेवालयाः अपि भारते वर्तन्ते। तमिलनाडुप्रान्ते ''वाग्मीणारु''नामक सिद्धः वाल्मीकिवंशीयः अष्टादश सिद्धेष्वेकः आसीदिति सः एट्टिक्डिमुस्गन् देवालये नागपट्टणे जीवसमाधिं प्राप इति स एव वाल्मीकिरिति कथयन्ति।

मद्रासूनगरे १३०० संवत्सरपूर्वकालीनः वाल्मीकिदेवालयः वर्तते।

अद्यापि कर्णाटकराज्ये राजनहळ्ळि प्रान्ते श्रीवाल्मीकिमठ महासंस्थानदेवालयः वर्तते। नेपालदेशे चित्वन् मण्डले प्रसिद्ध वाल्मीक्याश्रमः वर्तते। वर्षे वर्षे भारतीयहैन्दवाः वाल्मीकि जयन्तिं महावैभवोपेततया महानन्देन निर्वहन्ति। अस्मिन् वर्षे अक्टोबर् १७ दिनाङ्के वाल्मीक जयन्तिदिनं भक्तैः भारतीयैः विदेशस्थैरपि सर्वैरिपि निर्वहणीयम्।



# गरुडगर्वभङ्गः

तेलुगुमूलम् - श्रीमती वाविलाल्ल नागवल्लि
चित्राणि - श्री के. द्वारकानाथः
संस्कृतानुवादः - डा.के. सूर्यनारायणरेड्डि
चरवाणी - ८१०६५७८२५०

1 गरुत्मान् स्वमातरं विनतां अग्रजमातुः कद्रूदास्यात् निमुक्ताश्चकार। पश्चत् विष्णोः वाहनं बभूव। तदा गर्वविशृंखलता पूर्णः आसीत्। अतः विष्णुः तस्य गुण पाठं ददौ। तद्विधानं पश्यामः। गरुत्मान् स्वपितरं कश्यपमुद्दिश्य -

2 हे पितः! अहं मातरं दास्य विमुक्तामकरवम् आशीर्वादं वदत।

3 आं! कुमार महान् सन्तोषः।



4 हे कुमार त्वत्सदृशः एकोऽप्यलम् श्रीमहाविष्णोः वाहनं भूत्वा प्रसिद्धो भव।

5 हे पितः धन्योऽस्मि धन्योऽस्मि।



6 भगवतः विष्णोः अनुग्रहार्थं तीव्रं तपः करोति।

7 ओं नमो विष्णुरूपाय! ओं नमो विष्णुरूपाय!

8 हे गरुत्मन् तव तपसः सन्तुष्टोऽस्मि त्वं मम वाहनं भूत्वा प्रसिद्धो भविष्यसि।



9 स्वामिन् महाभाग्यमिदम्। एतस्मादन्यद्भाग्यं नास्ति।



10 अहो! अहं विष्णोरेव वाहन मभवम् मत्तः महान् कोऽपि नास्ति देवताः अपि मत्तः न्यूनाः एव।



11 देवताः तद्गर्वं दृष्ट्वा बाधामनस्का आसन्...

12 किं गरुत्मान् अस्मान् हि दृष्ट्या अल्पान् पश्यति? तस्य गर्वदमनाय न कोऽप्यस्ति वा? विष्णुरेव तस्य गर्वभङ्गं करिष्यति। वयं मौनेन स्थिताः पश्यामः।



(13) कदाचित् नारद महर्षिः नारायण नारायण इति ब्रुवन् श्रीविष्णुदर्शनार्थमागतः।

हे महर्षे नारद आगच्छन्तु। आगच्छन्तु उपविशन्तु! (14)

तथैव उपविशामि महान् सन्तोषः। (15)



हे कुमार गरुत्मान् इतः आगच्छ एवं वदन् विष्णुः गरुत्मतः भुजे हस्तं निक्षिप्तवान् विष्णुः। (16)

(17) नारद दृष्ट्वा महर्षे! विशेषाः उच्यताम्।



(18) द्वयोः मध्ये सम्भाषणं न पूर्णमासीत्।

भुजे असह्यवेदना वर्तते। बाधां सोढुं न शक्नोमि स्वामी किमर्थं मम भुजे, हस्तं न दूरीकरोति? (19)




(21) हे गरुत्मान्। किं तव सम्भूतम्। मूर्च्छितः भवसि मुखे जलसेचनं कृत्वा उत्थितं कुर्वन्तु इति पश्चात् उत्थितः गरुत्मान्।




हे स्वामिन् तव अन्तरङ्ग ज्ञातम्। भवान् मम भुजे हस्त निवेशने नैव बाधां सोढुं अशक्तः अभवम्। भवन्तं वहन् कथमाकाशे गमिष्यामि। सर्वं भवदाशीर्वादबलमिति न ज्ञातोऽस्मि। क्षमस्व मां ज्ञानोदयः जातः मां पाददासमिव अनुगृह्णन्तु। तदेवालम्। (23)



(24) हे गरुत्मन्! चराचर सृष्टिः सर्वापि मदधीना एव अहमेव सृष्टिकर्ता। अद्य जानीहि अवगतं वा।




नीतिः - यस्यां कस्यामपि स्थितौ गर्वान्धकारेण यं कमपि अल्पभावनया मा पश्यन्तु। अन्येषु अल्पभावना चेत् दैवेन त्वमेव अवमानितः भविष्यसि। अन्यान् गौरवेण पश्य। त्वमपि गौरवं प्राप्नुहि।

प्रदत्तं चित्रपटम् बिन्दुसाहाय्येन पूरयामः वा?

अस्य चित्रपटस्य रञ्जनं कुर्मः वा?

## बा ल वि नो दि नी









१. दीपावलि

२. सरस्वतीपूजा

३. दशरा



उचित समाधान सङ्ख्या कोशे लिखन्तु।



मेलनं वा निष्कासनं कृत्वा १० सङ्ख्या यत्र आगच्छति तस्मिन् मार्गे गच्छति चेत् बालकः, स्फुलिङ्गशलाकासमीपं गन्तुं शक्नोति।

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| 5 +5 | 11 −2 | 10 −1 | 2 +8 | 23 −10 | 16 −6 | 12 +5 | 28 −3 |
| 15 −5 | 7 +2 | 19 −10 | 19 −9 | 14 −4 | 72 −62 | 48 −38 | 19 −2 |
| 6 +4 | 25 −15 | 32 −22 | 18 −8 | 35 −20 | 36 −27 | 1 +9 | 39 −2 |
| 7 +2 | 27 −17 | 4 +6 | 13 −3 | 22 −12 | 25 −16 | 3 +7 | 0 +10 |



### श्री शारदा प्रार्थना

नमस्ते शारदे देवि काश्मीरपुरवासिनि।
त्वामहं प्रार्थये नित्यं विद्यादानं च देहि मे ॥१॥
या श्रद्धा धारणा मेधा वाग्देवी विधिवल्लभा।
भक्तजिह्वग्रसदना शमादिगुणदायिनी ॥२॥
नमामि यामिनीं नाथलेखालङ्कृतकुन्तलाम्।
भवानीं भवसन्तापनिर्वापणसुधानदीम् ॥३॥
भद्रकाल्यै नमो नित्यं सरस्वत्यै नमो नमः।
वेदवेदाङ्गवेदान्तविद्यास्थानेभ्य एव च ॥४॥
ब्रह्मस्वरूपा परमा ज्योतिरूपा सनातनी।
सर्वविद्याधिदेवी या तस्यै वाण्यै नमो नमः॥५॥
यया विना जगत्सर्वं शश्वज्ञीवन्मृतं भवेत्।
ज्ञानाधिदेवी या तस्यै सरस्वत्यै नमो नमः॥६॥
यया विना जगत्सर्वं मूकमुन्मत्तवत्सदा।
या देवी वागधिष्ठात्री तस्यै वाण्यै नमो नमः॥७॥





Printed by Sri P. Ramaraju, M.A., and Published by Dr. K. Radha Ramana, M.A., M.Phil., Phd., on behalf of Tirumala Tirupati Devasthanams and Printed and Publised at Tirumala Tirupati Devasthanams Press, K.T. Road, Tirupati 517 507. Editor : Dr.V.G. Chokkalingam, M.A., Ph.D.





तिरुमल श्रीवेङ्कटेश्वरस्वामिभ्यः दि.15.08.2024 आरभ्य 17.08.2024 पर्यन्त बहुरामणीयकतया प्रवर्तित पवित्रोत्सवाः, तत्र भागं गृहीतवन्तः ति.ति.दे. कार्यनिर्वहणाधिकारिणः श्री श्यामल रावु महोदयाः ऐ.ए.एस्., धर्मपत्न्या सह। ति.ति.दे. अनुबन्धकार्यनिर्वहणाधिकारिणः पूज्याः श्री सि.हेच्. वेङ्कय्यचौदरि महोदयाः ऐ.ए.एस्., अपि च अन्याधिकारिणः।



तिरुचानूरु, २०२४ आगस्टु १६ दिनाङ्के (तिथौ) अष्टलक्ष्मीव्रतमण्टपे मात्रे श्रीपद्मावतीदेव्यै वैभवोपेततया प्रवर्तितवरलक्ष्मीव्रते भागं गृहीतवन्तः ति.ति.दे. कार्यनिर्वहणाधिकारिणः पूज्याः श्री जे.श्यामलरावु महोदयाः ऐ.ए.एस्., धर्मपत्न्या सह।



तिरुपति श्रीवेङ्कटेश्वर गोसंरक्षणशालास्थ वेणुगोपालस्वाम्यालये 27.08.2024 तिथौ गोकुलाष्टमीगोपूजायां धर्मपत्न्या सह भागं गृहीतवन्तः पूज्याः श्री जे.श्यामलरावु ऐ.ए.एस्., महोदयाः अपि च ति.ति.दे. संयुक्तकार्यनिर्वहणाधिकारिण्यः पूज्याः श्रीमति गौतमी ऐ.ए.एस्., महोदयाः अन्ये अधिकारिणश्च।



तिरुपति 30.08.2024 तिथौ कपिलेश्नरस्वाम्यालये मात्रे कामाक्षीदेव्यै नयनोत्सवतया प्रवर्तित लक्षकुङ्कुमार्चनम्।



ति.ति.दे. परिपालन भवन प्राङ्गणप्राक स्थले 15.08.2024 तिथौ प्रवर्तित स्वातन्त्र्य दिनोत्सवे गौरव सैनिकवन्दनं स्वीकुर्वन्तः ति.ति.दे. कार्यनिर्वहणाधिकारिणः पूज्याः श्री जे. श्यामलरावु महोदयाः ऐ.ए.एस्., अपि च ति.ति.दे. अनुबन्धकार्यनिर्वहणाधिकारिणः पूज्याः श्री सि.हेच्. वेङ्कय्यचौदरि महोदयाः वि.आर्.यस्




तिरुपति श्रीकपिलेश्वरस्वाम्यालये 07.09.2024 तिथौ विनायकचविति पर्वदिन सन्दर्भे मूषिकवाहने श्रीविनायकस्वामिनां ग्रामोत्सव वैभवम्।

